हरिभक्तिविलासः

प्रथमो विलासः

अथ मङ्गलाचरणम्

चैतन्यदेवं भगवन्तमाश्रये
श्रीवैष्णवानां प्रमुदेऽञ्जसा लिखन्।
आवश्यकं कर्म विचार्य साधुभिः
सार्धं समाहृत्य समस्तशास्त्रतः॥ १॥
भक्तेर्विलासांश्चिनुते प्रबोधा
नन्दस्य शिष्यो भगवत्प्रियस्य।
गोपालभट्टो रघुनाथदासं
सन्तोषयन्रूपसनातनौ च॥ २॥
मथुरानाथपादाब्जप्रेमभक्तिविलासतः।
जातं भक्तिविलासाख्यं तद्भक्ताः शीलयन्त्विमम्॥ ३॥
जीयासुरात्यन्तिकभक्तिनिष्ठाः श्रीवैष्णवा माथुरमण्डलेऽत्र।
काशीश्वरः कृष्णवने चकास्तु श्रीकृष्णदासश्च सलोकनाथः॥ ४॥

तत्र लेख्यप्रतिज्ञा

आदौ सकारणं लेख्यं श्रीगुर्वाश्रयणं ततः।
गुरुः शिष्यः परीक्षादिर्भगवान्मनवोऽस्य च॥ ५॥
मन्त्राधिकारी सिद्ध्यादिशोधनं मन्त्रसंस्क्रियाः।
दीक्षा नित्यं ब्राह्मकाले शुभोत्थानं पवित्रता।
प्रातः स्मृत्यादि कृष्णस्य वाद्यादैश्च प्रबोधनम्॥ ६॥
निर्माल्योत्तारणाद्यादौ मङ्गलारात्रिकं ततः।
मैत्रादिकृत्यं शौचाचमनं दन्तस्य धावनम्॥ ७॥
स्नानं तान्त्रिकसन्ध्यादि देवसद्मादिसंस्क्रिया॥ ८॥
तुलस्याद्याहृतिर्गेहस्नानमुष्णोदकादिकम्।
वस्त्रं पीठं चोर्ध्वपुण्ड्रं श्रीगोपीचन्दनादिकम्॥ ९॥
चक्रादिमुद्रा माला च गृहसन्ध्यार्चनं गुरोः।
माहात्म्यं चाथ कृष्णस्य द्वारवेश्मान्तरार्चनम्॥ १०॥
पूजार्थासनमर्घ्यादिस्थापनं विघ्नवारणम्।
श्रीगुर्वादिनतिर्भूतशुद्धिः प्राणविशोधनम्॥ ११॥
न्यासमुद्रापञ्चकं च कृष्णध्यानान्तरार्चने।

पूजा पदानि श्रीमूर्तिशालग्रामशिलास्तथा ॥ १२ ॥
द्वारकोद्भवचक्राणि शुद्धयः पीठपूजनम् ।
आवाहनादि तन्मुद्रा आसनादिसमर्पणम् ॥ १३ ॥
स्नपनं शङ्खघण्टादिवाद्यं नामसहस्रकम् ।
पुराणपाठो वसनमुपवीतं विभूषणम् ॥ १४ ॥
गन्धः श्रीतुलसीकाष्ठचन्दनं कुसुमानि च ।
पत्राणि तुलसी चाङ्गोपाङ्गावरणपूजनम् ॥ १५ ॥
धूपो दीपश्च नैवेद्यं पानं होमो बलिक्रिया ।
अवगण्डूषाद्यास्यवासो दिव्यगन्धादिकं पुनः ॥ १६ ॥
राजोपचारा गीतादि महानीराजनं तथा ।
शङ्खादिवादनं साम्बुशङ्खनीराजनं स्तुतिः ॥ १७ ॥
नतिः प्रदक्षिणा कर्माद्यर्पणं जप याचने ।
आगःक्षमापणं नानागांसि निर्माल्यधारणम् ॥ १८ ॥
शङ्खाम्बुतीर्थं तुलसीपूजा तन्मृत्तिकादि च ।
धात्रीस्नाननिषेधस्य कालो वृत्तेरुपार्जनम् ॥ १९ ॥
मध्याह्ने वैशदेवादिश्राद्धं चानर्प्यमच्युते ।
विनार्चामशने दोषास्तथानर्पितभोजने ॥ २० ॥
नैवेद्यभक्षणं सन्तः सत्सङ्गोऽसदसङ्गतिः ।
असद्गतिर्वैष्णवोपहासनिन्दादिदुष्फलम् ॥ २१ ॥
सतां भक्तिर्विष्णुशास्त्रं श्रीमद्भागवतं तथा ।
लीलाकथा च भगवद्धर्माः सायं निजक्रियाः ॥ २२ ॥
कर्मपातपरीहारस्त्रिकालार्चा विशेषतः ।
नक्तं कृत्यान्यथो पूजाफलसिद्ध्यादिदर्शनम् ॥ २३ ॥
विष्ण्वर्थदानं विविधोपचारा न्यूनपूरणम् ।
शयनं महिमार्चायाः श्रीमन्नाम्नस्तथाद्भुतः ॥ २४ ॥
नामापराधा भक्तिश्च प्रेमाथाश्रयणादयः ।
पक्षेष्वेकादशी साङ्गा श्रीद्वादश्यष्टकं महत् ॥ २५ ॥
कृत्यानि मार्गशीर्षादिमासेषु द्वादशेष्वपि ।
पुरश्चरणकृत्यानि मन्त्रं सिद्धस्य लक्षणम् ॥ २६ ॥
मूर्त्याविर्भावनं मूर्तिप्रतिष्ठा कृष्णमन्दिरम् ।
जीर्णोद्धृतिः श्रीतुलसीविवाहोऽनन्यकर्म च ॥ २७ ॥

तत्र श्रीगुरूपसत्तिकारणम्

कृपया कृष्णदेवस्य तद्भक्तजनसङ्गतः ।
भक्तेर्माहात्म्यमाकर्ण्य तामिच्छन्सद्गुरुं भजेत् ॥ २८ ॥

अत्रानुभूयते नित्यं दुःखश्रेणी परत्र च।
दुःसहा श्रूयते शास्त्रात्तितीर्षेदपि तां सुधीः॥ २९॥

तथा चोक्तमेकादशस्कन्धे (BhP 11.9.29)
लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थदमनित्यमपीह धीरः।
तूर्णं यतेत न पतेदनुमृत्यु यावन्
निःश्रेयसाय विषयः खलु सर्वतः स्यात्॥ ३०॥

स्वयं श्रीभगवता च (BhP 11.20.17)
नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम्।
मयानुकूलेन नभस्वतेरितं
पुमान्भवाब्धिं न तरेत्स आत्महा॥ ३१॥

अथ श्रीगुरूपसत्तिः

तत्रैव श्रीप्रबुद्धयोगेश्वरोक्तौ (BhP 11.3.21)
तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्॥ ३२॥

स्वयं श्रीभगवदुक्तौ (BhP 11.10.5)
मदभिज्ञं गुरुं शान्तमुपासीत मदात्मकम्॥ ३३॥

क्रमदीपिकायां (4.2) च
विप्रं प्रध्वस्तकामप्रभृतिरिपुघटं निर्मलाङ्गं गरिष्ठां
भक्तिं कृष्णाङ्घ्रिपङ्केरुहयुगलरजोरागिणीमुद्वहन्तम्।
वेत्तारं वेदशास्तागमविमलपथां सम्मतं सत्सु दान्तं
विद्यां यः संविवित्सुः प्रवणतनुमना देशिकं संश्रयेत॥ ३४॥

श्रुतावपि (MuṇḍU 1.2.12, ChāU 6.14.2)
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्।
आचार्यवान्पुरुषो वेद॥ ३५॥

अथ गुरूपसत्तिनित्यता

श्रीभागवते दशमस्कन्धे श्रुतिस्तुतौ (BhP 10.87.33)
विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधरा जलधौ॥ ३६॥

श्रुतौ च (KaṭhU 1.2.9)
नैषा तर्केण मतिरापनेया
प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ॥ ३७॥

अथ विशेषतः श्रीगुरोर्लक्षणानि

मन्त्रमुक्तावल्याम्
अवदातान्वयः शुद्धः स्वोचिताचारतत्परः।
आश्रमी क्रोधरहितो वेदवित्सर्वशास्त्रवित्॥ ३८॥
श्रद्धावाननसूयश्च प्रियवाक्प्रियदर्शनः।
शुचिः सुवेशस्तरुणः सर्वभूतहिते रतः॥ ३९॥
धीमाननुद्धतमतिः पूर्णोऽहन्ता विमर्शकः।
सगुणोऽर्चासु कृतधीः कृतज्ञः शिष्यवत्सलः॥ ४०॥
निग्रहानुग्रहे शक्तो होममन्त्रपरायणः।
ऊहापोहप्रकारज्ञः शुद्धात्मा यः कृपालयः।
इत्यादिलक्षणैर्युक्तो गुरुः स्याद्गरिमानिधिः॥ ४१॥

अगस्त्यसंहितायां च
देवतोपासकः शान्तो विषयेष्वपि निःस्पृहः।
अध्यात्मविद्ब्रह्मवादी वेदशास्त्रार्थकोविदः॥ ४२॥
उद्धर्तुं चैव संहर्तुं समर्थो ब्राह्मणोत्तमः।
तत्त्वज्ञो यन्त्रमन्त्राणां मर्मभेत्ता रहस्यवित्॥ ४३॥
पुरश्चरणकृद्धोममन्त्रसिद्धः प्रयोगवित्।
तपस्वी सत्यवादी च गृहस्थो गुरुरुच्यते॥ ४४॥

विष्णुस्मृतौ
परिचर्यायशोलाभलिप्सुः शिष्याद्गुरुर्नहि।
कृपासिन्धुः सुसम्पूर्णः सर्वसत्त्वोपकारकः॥ ४५॥
निःस्पृहः सर्वतः सिद्धः सर्वविद्याविशारदः।
सर्वसंशयसंछेत्ता नालसो गुरुराहृतः॥ ४६॥

श्रीनारदपञ्चरात्रे श्रीभगवन्नारदसंवादे
ब्राह्मणः सर्वकालज्ञः कुर्यात्सर्वेष्वनुग्रहम् ।
तदभावाद्द्विजश्रेष्ठः शान्तात्मा भगवन्मयः ॥ ४७ ॥
भावितात्मा च सर्वज्ञः शास्त्रज्ञः सत्क्रियापरः ।
सिद्धित्रयमायुक्त आचार्यत्वेऽभिषेचितः ॥ ४८ ॥
क्षत्रविट्शूद्रजातीनां क्षत्रियोऽनुग्रहे क्षमः ।
क्षत्रियस्यापि च गुरोर्भावादीदृशो यदि ॥ ४९ ॥
वैश्यः स्यात्तेन कार्यश्च द्वये नित्यमनुग्रहः ।
सजातीयेन शूद्रेण तादृशेन महामते ।
अनुग्रहाभिषेकौ च कार्यौ शूद्रस्य सर्वदा ॥ ५० ॥

किं च
वर्णोत्तम् ।अथ च गुरौ सति या विश्रुतेऽपि च ।
स्वदेशतोऽथत्वान्यत्र नेदं कार्यं शुभार्थिना ॥ ५१ ॥
विद्यमाने तु यः कुर्यात्यत्र तत्र विपर्ययम् ।
तस्येहामुत्र नाशः स्यात्तस्माच्छास्त्रोक्तमाचरेत् ॥
क्षत्रविट्शूद्रजातीयः प्रातिलोम्यं न दीक्षयेत् ॥ ५२ ॥

पाद्मे च (PadmaP 6.253.26)
महाभागवतः श्रेष्ठो ब्राह्मणो वै गुरुर्नृणाम् ।
सर्वेषामेव लोकानामसौ पूज्यो यथा हरिः ॥ ५३ ॥

महाकूलप्रसूतोऽपि सर्वयज्ञेषु दीक्षितः ।
सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः ॥ ५४ ॥ इति ।

गृहीतविष्णुदीक्षाको विष्णुपूजापरो नरः ।
वैष्णवोऽभिहितोऽभिज्ञैरितरोऽस्मादवैष्णवः ॥ ५५ ॥

तत्त्वसागरे
बह्वाशी दीर्घसूत्री च विषयादिषु लोलुपः ।
हेतुवादरतो दुष्टोऽवाग्वादी गुणनिन्दकः ॥ ५६ ॥
अरोमा बहुरोमा च निन्दिताश्रमसेवकः ।
कालदन्तोऽसितौष्ठश्च दुर्गन्धिश्वासवाहकः ॥ ५७ ॥
दुष्टलक्षणसम्पन्नो यद्यपि स्वयमीश्वरः ।
बहुप्रतिग्रहासक्त आचार्यः श्रीक्षयावहः ॥ ५८ ॥

अथ शिष्यलक्षणानि

मन्त्रमुक्तावल्याम्
शिष्यः शुद्धान्वयः श्रीमान्विनीतः प्रियदर्शनः ।
सत्यवाक्पुण्यचरितोऽदभ्रधीर्दम्भवर्जितः ॥ ५९ ॥
कामक्रोधपरित्यागी भक्तश्च गुरुपादयोः ।
देवताप्रवणः कायमनोवाग्भिर्दिवानिशम् ॥ ६० ॥
नीरुजो निर्जिताशेषपातकः श्रद्धयान्वितः ।
द्विजदेवपितॄणां च नित्यमर्चापरायणः ॥ ६१ ॥
युवा विनियताशेषकरणः करुणालयः ।
इत्यादिलक्षणैर्युक्तः शिष्यो दीक्षाधिकारवान् ॥ ६२ ॥

एकादशस्कन्धे च (BhP 11.10.6)
अमान्यमत्सरो दक्षो निर्ममो दृढसौहृदः ।
असत्वरो ऽर्थजिज्ञासुरनसूयुरमोघवाक् ॥ ६३ ॥

अथापेक्ष्याः

अगस्त्यसंहितायाम्

अलसा मलिनाः क्लिष्टा दाम्भिकाः कृपणास्तथा ।
दरिद्रा रोगिणो रुष्टा रागिणो भोगलालसाः ॥ ६४ ॥
असूयामत्सरग्रस्ताः शठाः परुषवादिनः ।
अन्यायोपार्जितधनाः परदाररताश्च ये ॥ ६५ ॥
विदुषां वैरिणश्चैव अज्ञाः पण्डितमानिनः ।
भ्रष्टव्रताश्च ये कष्टवृत्तयः पिशुनाः खलाः ॥ ६६ ॥
बह्वाशिनः क्रूरचेष्टा दुरात्मनश्च निन्दित ।
इत्येवमादयोऽप्यन्ये पापिष्ठाः पुरुषाधमाः ॥ ६७ ॥
अकृत्येभ्योऽनिवार्याश्च गुरुशिक्षासहिष्णवः ।
एवम्भूताः परित्याज्याः शिष्यत्वे नोपकल्पिताः ॥ ६८ ॥
यद्येते ह्युपकल्पेरन्देवताक्रोशभाजनाः ।
भवन्तीह दरिद्रास्ते पुत्रदारविवर्जिताः ॥ ६९ ॥
नारकाश्चैव देहान्ते तिर्यञ्चः प्रभवन्ति ते ॥ ७० ॥

हयशीर्षपञ्चरात्रे

जैमिनिः सुगतश्चैव नास्तिको नग्न एव च ।
कपिलश्चाक्षपादश्च षडेते हेतुवादिनः ॥ ७१ ॥
एतन्मतानुसारेण वर्तन्ते ये नराधमाः ।
ते हेतुवादिनः प्रोक्तास्तेभ्यस्तन्त्रं न दापयेत् ॥ ७२ ॥ इति ।

तयोः परीक्षा चान्योऽन्यमेकाब्दं सहवासतः ।
व्यवहारस्वभावानुभवेनैवाभिजायते ॥ ७३ ॥

अथ परीक्षणम्

मन्त्रमुक्तावल्यां
तयोर्वत्सरवासेन ज्ञातान्योन्यस्वभावयोः ।
गुरुता शिष्यता चेति नान्यथैवेति निश्चयः ॥ ७४ ॥

श्रुतिश्च
नासंवत्सरवासिने देयात् ॥ ७५ ॥

सारसङ्ग्रहेऽपि
सद्गुरुः स्वाश्रितं शिष्यं वर्षमेकं परीक्षयेत् ॥ ७६ ॥
राज्ञि चामात्यजा दोषाः पत्नीपापं स्वभर्तरि ।
तथा शिष्यार्जितं पापं गुरुः प्राप्नोति निश्चितम् ॥ ७७ ॥

क्रमदीपिकायां तु (4.3)
सन्तोषयेदकुटिलाद्रेतरान्तरात्मा
तं स्वैर्धनैश्च वपुषाप्यनुकूलवाण्या ।
अब्दत्रयङ्कमलन्भधियाऽतिधीरस्
तुष्टे विवक्षतु गुरावथ मन्त्रदीक्षाम् ॥ ७८ ॥

अथ विशेषतः श्रीगुरुसेवाविधिः

कौर्मे श्रीव्यासगीतायाम्
उदकुम्भं कुशान्पुष्पं समिधोऽस्याहरेत्सदा ।
मार्जनं लेपनं नित्यमङ्गानां वाससां चरेत् ॥ ७९ ॥
नास्य निर्माल्यशयनं पादुकोपासनहावपि ।
आक्रामेदासनं छायामासन्दीं वा कदाचन ॥ ८० ॥
साधयेद्दन्तकाष्ठादीन्कृत्यं चास्मै निवेदयेत् ॥ ८१ ॥

अनापृच्छ्य न गन्तव्यं भवेत्प्रियहिते रसः।
न पादौ सारयेदस्य सन्निधाने कदाचन॥ ८२॥
जृम्भाहास्यादिकं चैव कण्ठप्रावरणं तथा।
वर्जयेत्सन्निधौ नित्यमथास्फोटनमेव च॥ ८३॥

किं च
श्रेयस्तु गुरुवद्वृत्तिर्नित्यमेव समाचरेत्।
गुरुपुत्रेषु दारेषु गुरोश्चैव स्वबन्धुषु॥ ८४॥
उत्सादनं वै गात्राणां स्नापनोच्छिष्टभोजने।
न कुर्याद्गुरुपुत्रस्य पादयोः शौचमेव च॥ ८५॥
गुरुवत्परिपूज्याश्च सवर्णा गुरुयोषितः।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः॥ ८६॥
अभ्यञ्जनं स्नापनं च गात्रोत्सादनमेव च।
गुरुपत्न्या च कार्याणि केशानां च प्रसाधनम्॥ ८७॥

देव्यागमे श्रीशिवोक्तौ
गुरुशय्यासनं यानं पादुके पादपीठकम्।
स्नानोदकं तथा छायां लङ्घयेन्न कदाचन॥ ८८॥
गुरोरग्रे पृथक्पूजामद्वैतं च परित्यजेत्।
दीक्षां व्याख्यां प्रभुत्वं च गुरोरग्रे विवर्जयेत्॥ ८९॥

श्रीनारदोक्तौ
यत्र यत्र गुरुं पश्येत्तत्र तत्र कृताञ्जलि।
प्रणमेत्दण्डवद्भूमौ छिन्नमूल इव द्रुमः॥ ९०॥
गुरोर्वाक्यासनं यानं पादुकोपानहौ तथा।
वस्त्रं छायां तथा शिष्यो लङ्घयेन्न कदाचन॥ ९१॥

श्रीमनुस्मृतौ (not found)
नोदाहरेद्गुरोर्नाम परोक्षमपि केवलम्।
न चैवास्यानुकुर्वीत गतिभाषणचेष्टितम्॥ ९२॥
गुरोर्गुरौ सन्निहिते गुरुवद्वृतिमाचरेत्।
न चाविसृष्टो गुरुणा स्वान्गुरूनभिवादयेत्॥ ९३॥

श्रीनारदपञ्चरात्रे
यथा तथा यत्र तत्र न गृह्णीयाच्च केवलम्।
अभक्त्या न गुरोर्नाम गृह्णीयाच्च यतात्मवान्॥ ९४॥

प्रणवः श्रीस्ततो नाम विष्णुशब्दादनन्तरम् ।
पादशब्दसमेतं च नतमूर्धाञ्जलीयुतः ॥ ९५ ॥

किं च
न तमाज्ञापयेन्मोहात्तस्याज्ञां न च लङ्घयेत् ।
नानिवेद्य गुरोः किञ्चिद्भोक्तव्यं वा गुरोस्तथा ॥ ९६ ॥

अन्यत्र च
आयान्तमग्रतो गच्छेद्गच्छन्तं तमनुव्रजेत् ।
आसने शयने वापि न तिष्ठेदग्रतो गुरोः ॥ ९७ ॥
यत्किञ्चिदन्नपानादि प्रियं द्रव्यं मनोरमम् ।
समर्प्य गुरवे पश्चात्स्वयं भुञ्जीत प्रत्यहम् ॥ ९८ ॥

श्रीविष्णुस्मृतौ
न गुरोरप्रियं कुर्यात्ताडितः पीडितोऽपि वा ।
नावमन्येत तद्वाक्यं नाप्रियं हि समाचरेत् ॥ ९९ ॥
आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा स याति परमां गतिम् ॥ १०० ॥

श्रीनारदपञ्चरात्रे
यो वक्ति न्यायरहितमन्यायेन शृणोति यः ।
तावुभौ नरकं घोरं व्रजतः कालमक्षयम् ॥ १०१ ॥

वैष्णवतन्त्रे
त्रायस्व भो जगन्नाथ गुरो संसारवह्निना ।
दग्धं मां कालदष्टं च त्वामहं शरणं गतः ॥ १०२ ॥ इति ।

तत्र श्रीवासुदेवस्य सर्वदेवशिरोमणेः ।
पादाम्बुजैकभागेव दीक्षा ग्राह्या मनीषिभिः ॥ १०३ ॥

प्रथमस्कन्धे (BhP 1.2.23)
सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्
युक्तः परमपुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः ॥ १०४ ॥

किं च  (BhP 1.18.21)
अथापि यत्पादनखावसृष्टं
जगद्विरिञ्चोपहृतार्हणाम्भः।
सेशं पुनात्यन्यतमो मुकुन्दात्
को नाम लोके भगवत्पदार्थः॥ १०५॥

श्रीदशमस्कन्धे  (BhP 10.89.15)
तन्निशम्याथ मुनयो विस्मिता मुक्तसंशयाः।
भूयांसं श्रद्दधुर्विष्णुं यतः शान्तिर्यतो ऽभयम्॥ १०६॥

पाद्मे वैशाखमाहात्म्ये यमब्राह्मणसंवादे  (PadmaP 5.97.27)
व्यामोहाय चराचरस्य जगतस्ते ते पुराणागमास्
तां तामेव हि देवतां परमिकां जल्पन्तु कल्पावधि।
सिद्धान्ते पुनरेक एव भगवान्विष्णुः समस्तागम
व्यापारेषु विवेचनव्यतिकरं नीतेषु निश्चीयते॥ १०७॥

नारसिंहे
सत्यं सत्यं पुनः सत्यमुत्क्षिप्य भुजमुच्यते।
वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः॥ १०८॥

यतः पाद्मे
अरिर्मित्रं विषं पथ्यमधर्मो धर्मतां व्रजेत्।
सुप्रसन्ने हृषीकेशे विपरीते विपर्ययः॥ १०९॥

तत्रैव श्रीभगवद्वाक्यम्
मन्निमित्तं कृतं पापमपि धर्माय कल्पते।
मामनादृत्य धर्मोऽपि पापं स्यान्मत्प्रभावतः॥ ११०॥

अतवोक्तं स्कान्दे श्रीब्रह्मनारदसंवादे
वासुदेवं परित्यज्य योऽन्यं देवमुपासते।
स्वमातरं परित्यज्य श्वपचीं वन्दते हि सः॥ १११॥

तत्रैवान्यत्र
वासुदेवं परित्यज्य योऽन्यं देवमुपासते।
त्यक्त्वामृतं स मूढात्मा भुङ्क्ते हलाहलं विषम्॥ ११२॥

महाभारते
यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते ।
स हेमराशिमुत्सृज्य पांशुराशिं जिघृक्षति ॥ ११३ ॥
अनादृत्य तु यो विष्णुमन्यदेवं समाश्रयेत् ।
गङ्गाम्भसः स तृष्णार्तो मृगतृष्णां प्रधावति ॥ ११४ ॥

पञ्चरात्रे
यो मोहाद्विष्णुमन्येन हीनदेवेन दुर्मतिः ।
साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः ॥ ११५ ॥

वैष्णवतन्त्रे
न लभेयुः पुनर्भक्तिं हरेरैकान्तिकीं जडाः ।
एकाग्रमनसश्चापि विष्णुसामान्यदर्शिनः ॥ ११६ ॥

अन्यत्र च
यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
समत्वेनैव वीक्षेत स पाषण्डी भवेद्ध्रुवम् ॥ ११७ ॥ इति ।

सहस्रनामस्तोत्रादौ श्लोकौघाः सन्ति चेदृशाः ।
विशेषतः सत्त्वनिष्ठैः सेवोऽिविष्णुर्न चापरः ॥ ११८ ॥

तथा च श्रीहरिवंशे शिववाक्यम्
हरिरेव सदाराध्यो भवद्भिः सत्त्वसंस्थितैः ।
विष्णुमन्त्रं सदा विप्राः पठध्वं ध्यात केशवम् ॥ ११९ ॥ इति ।

ईदृङ्माहात्म्यवाक्येषु सङ्गृहीतेषु सर्वतः ।
ग्रन्थबाहुल्यदोषः स्याल्लिख्यन्तेऽपेक्षितानि तत् ॥ १२० ॥

अथ श्रीवैष्णवमन्त्रमाहात्म्यम्

आगमे
मन्त्रान्श्रीमन्त्रराजादीन्वैष्णवान्गुर्वनुग्रहात् ।
सर्वैश्वर्यं जपन्प्राप्य याति विष्णोः परं पदम् ॥ १२१ ॥
पुण्यं वर्षसहस्रैर्यैः कृतं सुविपुलं तपः ।
जपन्ति वैष्णवान्मन्त्रान्नरास्ते लोकपावनाः ॥ १२२ ॥

वैष्णवे च
प्रजपन्वैष्णवान्मन्त्रान्यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत्सद्यो मुच्यतेऽसौ महाभयात् ॥ १२३ ॥ इति ।

लिख्यते विष्णुमन्त्राणां महिमाथ विशेषतः ।
तात्पर्यतः श्रीगोपालमन्त्रमाहात्म्यपुष्टये ॥ १२४ ॥

तत्र द्वादशाक्षराष्टाक्षरयोर्माहात्म्यम्

पद्मपुराणे देवदूतविकुण्डलसंवादे
साङ्गं समुद्रं सन्यासं सऋषिदैवतम् ।
सदीक्षाविधि सध्यानं सयन्त्रं द्वादशाक्षरम् ॥ १२५ ॥
अष्टाक्षरं च मन्त्रेशं ये जपन्ति नरोत्तमाः ।
तान्दृष्ट्वा ब्रह्महा शुध्येते यतो विष्णवः स्वयम् ॥ १२६ ॥
शङ्खिनश्चक्रिणो भूत्वा ब्रह्मायुर्वनमालिनः ।
वसन्ति वैष्णवे लोके विष्णुरूपेण ते नराः ॥ १२७ ॥

तत्रैव द्वादशाक्षरयस्चतुर्थस्कन्धे (BhP 4.8.53)
जपश्च परमो गुह्यः श्रूयतां मे नृपात्मज ।
यं सप्तरात्रं प्रपठन्पुमान्पश्यति खेचरान् ॥ १२८ ॥

श्रीविष्णुपुराणे (ViP 1.6.40)
गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥ १२९ ॥

अष्टाक्षरस्य यथा नारदपञ्चरात्रे
त्रयो वेदाः षडङ्गानि छन्दांसि विविधाः सुराः ।
सर्वमष्टाक्षरान्तःस्थं यच्चान्यदपि वाङ्मयम् ॥ १३० ॥
सर्ववेदान्तसारार्थः संसारार्णवतारणः ।
गतिरष्टाक्षरो नृणां न पुनर्भवकाङ्क्षिणाम् ॥ १३१ ॥
यत्राष्टाक्षरसंसिद्धो महाभागो महीयते ।
न तत्र सञ्चरिष्यन्ति व्याधिदुर्भिक्षतस्कराः ॥ १३२ ॥
देवदानवगन्धर्वाः सिद्धविद्याधरादयः ।
प्रणमन्ति महात्मानमष्टाक्षरविदं नरम् ॥ १३३ ॥
व्यक्तं हि भगवानेव साक्षान्नारायणः स्वयम् ।
अष्टाक्षरस्वरूपेण मुखेषु परिवर्तते ॥ १३४ ॥

पाद्मोत्तरखण्डे  (PadmaP 6.226.18)
एवमष्टाक्षरो मन्त्रो ज्ञेयः सर्वार्थसाधकः।
सर्वदुःखहरः श्रीमान्सर्वमन्त्रात्मकः शुभः॥ १३५॥

लिङ्गपुराणे
किमन्यैर्बहुभिर्मन्त्रैः किमन्यैर्बहुभिर्व्रतैः।
नमो नारायणेति मन्त्रः सर्वार्थसाधकः॥ १३६॥
तस्मात्सर्वेषु कालेषु नमो नारायणेति यः।
जपेत्स याति विप्रेन्द्र विष्णुलोकं सबान्धवः॥ १३७॥

भविष्यपुराणे
अष्टाक्षरो महामन्त्रः सर्वपापहरः परः।
सर्वेषां विष्णुमन्त्राणां राजत्वे परिकीर्तितः॥ १३८॥

श्रीशुकव्याससंवादे च
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः।
भक्तानां जपतां तात स्वर्गमोक्षफलप्रदः॥ १३९॥
एष एव परो मोक्ष एष स्वर्ग उदाहृतः।
सर्ववेदरहस्येभ्यः सार एष समुद्धृतः॥ १४०॥
विष्णुना वैष्णवानां तु हिताय मनुना पुरा।
कीर्तितः सर्वपापघ्नः सर्वकामप्रदायकः॥ १४१॥
नारायणाय नम इत्ययमेव सत्यं
संसारघोरविषसंहरणाय मन्त्रः।
शृण्वन्तु सत्यमतयो मुदितास्तरागा
उच्चैस्तरामुपदिशाम्यहमूर्ध्वबाहुः॥ १४२॥
भूत्वोर्ध्वबाहुरद्याहं सत्यपूर्वं ब्रवीमि वः।
हे पुत्रशिष्याः शृणुत न मन्त्रोऽष्टाक्षरात्परः॥ १४३॥

अतवोक्तं गारुडे
आसीनो वा शयानो वा तिष्ठानो यत्र तत्र वा।
नमो नारायणेति मन्त्रैकशरणो भवेत्॥ १४४॥

तापनीश्रुतिषु  (NṛsiṁhaTU 1.5.8)
देवा ह वै प्रजापतिमब्रुवन्नानुष्टुभस्य मन्त्रराजस्य नारसिंहस्य फलं
नो ब्रूहि भगव इति स होवाच प्रजापतिर्य एतं मन्त्रराजं

नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स सर्वपूतो भवति स सर्वपूतो भवति ॥ १४५ ॥

तत्रैवान्ते (NṛsiṁhaTU 5.9-10)
अनुपनीतशतमेकमेकेनोपनीतेन तत्समम्। उपनीतशतमेकमेकेन गृहस्थेन तत्समम्। गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं। वानप्रस्थशतमेकमेकेन यतिना तत्समं। यतीनां तु शतं पूर्णमेकमेकेन रुद्रजापकेन तत्समम्। रुद्रजापकशतमेकमेकेन अथर्वशिरःशिखाध्यापकेन तत्समम्।

तद्वा एतत्परमं धाम मन्त्रराजाध्यापकस्य यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमा भाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं परमं पदं यत्र गत्वा न निवर्तन्ते योगिनः। तदेतदृचाभ्युक्तम्। तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पदम्॥ १४६ ॥

अथ श्रीराममन्त्राणां माहात्म्यम्

अगस्त्यसंहितायाम्
सर्वेषु मन्त्रवर्गेषु श्रेष्ठं वैष्णवमुच्यते।
गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदम्॥ १४७ ॥
वैष्णवेष्वपि मन्त्रेषु राममन्त्राः फलाधिकाः।
गाणपत्यादिमन्त्रेभ्यः कोटिकोटिगुणाधिकाः॥ १४८ ॥
विनैव दीक्षां विप्रेन्द्र पुरश्चर्यां विनैव हि।
विनैव न्यासविधिना जपमात्रेण सिद्धिदाः॥ १४९ ॥
मन्त्रेष्वष्टस्वनायासफलदोऽयं षडक्षरः।
षडक्षरोऽयं मन्त्रस्तु महाघौघनिवारणः॥ १५० ॥
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः।
दैनन्दिनं तु दुरितं पक्षमासर्तुवर्षजम्॥ १५१ ॥
सर्वं दहति निःशेषं तूलाचलमिवानलः।
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च॥ १५२ ॥
स्वर्णस्तेयसुरापानगुरुतल्पयुतानि च।

कोटिकोटिसहस्राणि ह्युपपापानि यान्यपि।
सर्वाण्यपि प्रणश्यन्ति राममन्त्रानुकीर्तनात्॥ १५३॥

तापनीश्रुतिषु च
य एतत्तारकं ब्राह्मणो नित्यमधीते स पाप्मानं तरति स मृत्युं तरति स भ्रूहत्यां तरति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति स विमुक्ताश्रितो भवति सोऽमृतत्वं च गच्छति॥ १५४॥

अथ गोपालदेवमन्त्रमाहात्म्यम्

मन्त्रास्तु कृष्णदेवस्य साक्षाद्भगवतो हरेः।
सर्वावतारबीजस्य सर्वतो वीर्यवत्तमाः॥ १५५॥

तथा च बृहद्गौतमीये श्रीगोविन्दवृन्दावनाख्ये
सर्वेषां मन्त्रवर्याणां श्रेष्ठो वैष्णव उच्यते।
विशेषात्कृष्णमनवो भोगमोक्षैकसाधनम्॥ १५६॥
यस्य यस्य च मन्त्रस्य यो यो देवस्तथा पुनः।
अभेदात्तन्मनूनां च देवता सैव भाष्यते॥ १५७॥
कृष्ण एव परं ब्रह्म सच्चिदानन्दविग्रहः।
स्मृतिमात्रेण तेषां वै भुक्तिमुक्तिफलप्रदः॥ १५८॥ इति।

तत्रापि भगवत्तां स्वां तन्वतो गोपलीलया।
तस्य श्रेष्ठतमा मन्त्रास्तेष्वप्यष्टादशाक्षरः॥ १५९॥

तापनीश्रुतिषु
ओं मुनयो ह वै ब्रह्माणमूचुः। कः परमो देवः। कुतो मृत्युर्बिभेति। कस्य ज्ञानेनाखिलं ज्ञातं भवति। केनेदं विश्वं संसरतीति। तानु होवाच ब्राह्मणः कृष्णो वै परमं दैवतम्। गोविन्दान्मृत्युर्बिभेति। गोपीजनवल्लभज्ञानेनाखिलं ज्ञातं भवति। स्वाहयेदं संसरतीति। तमु होचुः। कः कृष्णो गोविन्दः कोऽसौ गोपीजनवल्लभः कः का स्वाहेति। तानुवाच ब्राह्मणः पापकर्षणो गोभूमिवेदविदितो वेदिता गोपीजनाविद्याकलाप्रेरकस्तन्माया चेति। सकलं परं ब्रह्मैव तत्। यो ध्यायति रसति भजति सोऽमृतो भवति सोऽमृतो भवतीति। ते होचुः किं तद्रूपं किं रसनं कथं वाहो तद्भजनं। तत्सर्वं विविदिषतामाख्याहीति। तदु होवाच हैरण्यः गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रितम्॥ १६०॥ (GTU 1.28)

किं च तत्रैवाग्रे
भक्तिरस्य भजनम्। तदिहामुत्रोपाधिनैरास्येनैवामुष्मिन्मनःकल्पनम्।
एतदेव च नैष्कर्म्यम्।

कृष्णं तं विप्रा बहुधा यजन्ति
गोविन्दं सन्तं बहुधाराधयन्ति।
गोपीजनवल्लभो भुवनानि दध्रे
स्वाहाश्रितो जगदेजय्जत्स्वरेताः॥ १६१॥ (GTU 1.14-15)

वायुर्यथैको भुवनं प्रविष्टो
जन्ये जन्ये पञ्चरूपो बभूव।
कृष्णस्तथैकोऽपि जगद्धितार्थं
शब्देनासौ पञ्चपदो विभाति॥ १६२॥ इति। (GTU 1.16)

किं च तत्रैवोपासनविधिकथनानन्तरम्

एको वशी सर्वगः कृष्ण ईड्य
एकोऽपि सन्बहुधा यो विभाति।
तं पीठस्थं येऽनुभजन्ति धीरास्
तेषां सुखं शाश्वतं नेतरेषाम्॥ १६३॥

नित्यो नित्यानां चेतनश्चेतनानाम्
एको बहूनां यो विदधाति कामान्।
तं पीठगं येऽनुभजन्ति धीरास्
तेषां सिद्धिः शाश्वती नेतरेषाम्॥ १६४॥

एतद्विष्णोः परमं पदं ये
नित्यमुक्ताः संयजन्ते न कामान्।
तेषामसौ गोपरूपः प्रयत्नात्
प्रकाशयेदात्मपदं तदैव॥ १६५॥

यो ब्रह्माणं विदधाति पूर्वं
यो विद्यास्तस्मै गोपायति स्म कृष्णः।
तं ह दैवमात्मबुद्धिप्रकाशं
मुमुक्षुर्वै शरणमनुव्रजेत॥ १६६॥

ओंकारेणान्तरितं ये जपन्ति
गोविन्दस्य पञ्चपदं मनुम्।
तेषामसौ दर्शयेदात्मरूपं
तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै ॥ १६७ ॥

तस्मादन्ये पञ्चपदादभूवन्
गोविन्दस्य मनवो मानवानाम्।
दशार्णाद्यास्तेऽपि सङ्क्रन्दनाद्यैर्
अभ्यस्यन्ते भूतिकामैर्यथावत्॥ १६८ ॥

किं च तत्रैव
तदु होवाच ब्राह्मणोऽसावनवरतं मे ध्यातः स्तुतः परार्धान्ते
सोऽबुध्यत। गोपवेशो मे पुरुषः पुरस्तादाविर्बभूव। ततः प्रणतेन
मयाऽनुकूलेन हृदा मह्यमष्टादशार्णं स्वरूपं सृष्टये
दत्त्वान्तर्हितः। पुनः सिसृक्षा मे प्रादुरभूत्। तेष्वक्षरेषु
भविष्यज्जगद्रूपं प्रकाशयत्। तदिह कादापो। लात्पृथिवी। ईतोऽग्निः।
बिन्दोरिन्दुः। तन्नादादर्क इति क्लींकारादसृजम्। कृष्णादाकाशं
यद्वायुरित्युत्तरात्सुरभिं विद्यां प्रादुरकार्षम्। तदुत्तरात्तदुत्तरात्स्त्रीपुमादि
चेदं सकलमिदं इति ॥ १६९ ॥

तथा च गौतमीयतन्त्रे
क्लींकारादसृजद्विश्वमिति प्राह श्रुतेः शिरः।
लकारात्पृथिवी जाता ककाराज्जलसम्भवः॥ १७० ॥
ईकाराद्वह्निरुत्पन्नो नादादायुरजायत।
बिन्दोराकाशसम्भूतिरिति भूतात्मको मनुः॥
स्वाशब्देन च क्षेत्रज्ञो हेति चित्प्रकृतिः परा।
तयोरैक्यसमुद्भूतिर्मुखवेष्टनवर्णकः॥
अतव हि विश्वस्य लयः स्वाहार्णके भवेत्॥ १७१ ॥

पुनश्च सा श्रुतिः
एतस्यैव यजनेन चन्द्रध्वजो गतमोहमात्मानं वेदयित्वा ओंकारान्तरालकं
मनुमावर्तयत्सङ्गरहितोऽभ्यानयत्। तद्विष्णोः परमं पदं सदा
पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तस्मादेनं नित्यमभ्यसेत्॥ १७२ ॥
इत्यादि।

तत्रैवाग्रे

यस्य पूर्वपदाद्भूमिर्द्वितीयात्सलिलोद्भवः ।
तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः ॥ १७३ ॥
पञ्चमादम्बरोत्पत्तिस्तमेवैकं समभ्यसेत् ।
चन्द्रध्वजोऽगमद्विष्णुः परमं पदमव्ययम् ॥ १७४ ॥

ततो विशुद्धं विमलं
विशोकमशेषलोभादिनिरस्तसङ्गम् ।
यत्तत्पदं पञ्चपदं तदेव
स वासुदेवो न यतोऽन्यदस्ति ॥ १७५ ॥

तमेकं गोविन्दं सच्चिदानन्दविग्रहम्पञ्चपदं
वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं परमया स्तुत्या
तोषयामि ॥ १७६ ॥ इति ।

किं च स्तुत्यनन्तरम्
अमुं पञ्चपदं मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं तत्पदं तत्
। अनेजदेकं मनसो जवीयो नैतद्देवा आप्नुवन्पूर्वमर्शात् ॥ १७७ ॥

तस्मात्कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं यजेदिति ओं तत्सदिति ॥ १७८ ॥

त्रैलोक्यसंमोहनतन्त्रे च देवीं प्रति
श्रीमहादेवोक्ताष्टादशाक्षरप्रसङ्ग एव
धर्मार्थकाममोक्षाणामीश्वरो जगदीश्वरः ।
सन्ति तस्य महाभागा अवताराः सहस्रशः ॥ १७९ ॥
तेषां मध्येऽवताराणां बालत्वमतिदुर्लभम् ।
अमानुषाणि कर्माणि तानि तानि कृतानि च ॥ १८० ॥
शापानुग्रहकर्तृत्वे येन सर्वं प्रतिष्ठितम् ।
तस्य मन्त्रं प्रवक्ष्यामि साङ्गोपाङ्गमनुत्तमम् ॥ १८१ ॥
यस्य विज्ञानमात्रेण नरः सर्वज्ञतामियात् ।
पुत्रार्थी पुत्रमाप्नोति धर्मार्थी लभते धनम् ॥ १८२ ॥
सर्वशास्त्रार्थपारज्ञो भवत्येव न संशयः ।
त्रैलोक्यं च वशीकुर्यात्व्याकुलीकुरुते जगत् ॥ १८३ ॥
मोहयेत्सकलं सोऽपि मारयेत्सकलात्रिपून् ।
बहुना किमिहोक्तेन मुमुक्षुर्मोक्षमाप्नुयात् ॥ १८४ ॥
यथा चिन्तामणिः श्रेष्ठो यथा गौश्च यथा सती ।
यथा द्विजो यथा गङ्गा तथासौ मन्त्र उत्तमः ॥ १८५ ॥

यथावदखिलश्रेष्ठं यथा शास्त्रं तु वैष्णवम् ।
यथा सुसंस्कृता वाणी तथासौ मन्त्र उत्तमः ॥ १८६ ॥

किं च
अतो मया सुरेशानि प्रत्यहं जप्यते मनुः ।
नैतेन सदृशः कश्चिद्जगत्यस्मिन्चरचरे ॥ १८७ ॥

सनत्कुमारकल्पेऽपि
गोपालविषया मन्त्रास्त्रयस्त्रिंशत्प्रभेदतः ।
तेषु सर्वेषु मन्त्रेषु मन्त्रराजमिमं शृणु ॥ १८८ ॥
सुप्रसन्नमिमं मन्त्रं तन्त्रे सम्मोहनाह्वये ।
गोपनीयस्त्वया मन्त्रो यत्नेन मुनिपुङ्गव ॥ १८९ ॥
अनेन मन्त्रराजेन महेन्द्रत्वं पुरन्दरः ।
जगाम देवदेवेशो विष्णुना दत्तमञ्जसा ॥ १९० ॥
दुर्वाससः पुरा शापादसौभाग्येन पीडितः ।
स एव सुभगवत्वं वै तेनैव पुनराप्तवान् ॥ १९१ ॥
बहुना किमिहोक्तेन पुरश्चरणसाधनैः ।
विनापि जपमात्रेण लभते सर्वमीप्सितम् ॥ १९२ ॥

प्रभुं श्रीकृष्णचैतन्यं तं नतोऽस्मि गुरूत्तमम् ।
कथञ्चिदाश्रयाद्यस्य प्राकृतोऽप्युत्तमो भवेत् ॥ १९३ ॥

अथाधिकारनिर्णयः

तान्त्रिकेषु च मन्त्रेषु दीक्षायां योषितामपि ।
साध्वीनामधिकारोऽस्ति शूद्रादीनां च सद्धियाम् ॥ १९४ ॥

तथा च स्मृत्यर्थसारे पाद्मे च वैशाखमाहात्म्ये (PadmaP 6.84.48, 52-4) श्रीनारदाम्बरीषसंवादे

आगमोक्तेन मार्गेण स्त्रीशूद्रैरपि पूजनम् ।
कर्तव्यं श्रद्धया विष्णोश्चिन्तयित्वा पतिं हृदि ॥ १९५ ॥
शूद्राणां चैव भवति नाम्ना वै देवतार्चनम् ।
सर्वे ऽप्यागममार्गेण कुर्युर्वेदानुकारिणा ॥ १९६ ॥
स्त्रीणामप्यधिकारोऽस्ति विष्णोराराधनादिषु ।
पतिप्रियरतानां च श्रुतिरेषा सनातनी ॥ १९७ ॥

अगस्त्यसंहितायां श्रीराममन्त्रराजमुद्दिश्य
शुचिव्रततमाः शूद्रा धार्मिका द्विजसेवकाः।
स्त्रियः पतिव्रताश्चान्ये प्रतिलोमानुलोमजाः॥
लोकाश्चाण्डालपर्यन्ताः सर्वेऽप्यत्राधिकारिणः॥ १९८॥ इति।

गुरुश्च सिद्धसाध्यादिमन्त्रदाने विचारयेत्।
स्वकुलान्यकुलत्वं च बालप्रौढत्वमेव च॥ १९९॥
स्त्रीपुंनपुंसकत्वं च राशिनक्षत्रमेलनम्।
सुप्तप्रबोधकालं च तथा ऋणधनादिकम्॥ २००॥

अथ सिद्धसाध्यादिशोधनम्

सरदातिलके
प्राक्प्रत्यगग्रा रेखाः स्युः पञ्च याम्योत्तराग्रगाः।
तावत्यश्च चतुष्कोष्ठचतुष्कं मण्डलं भवेत्॥ २०१॥
इन्द्वग्निरुद्रनववनेत्रयुगेन दिक्षु
ऋत्वष्टषडशचतुर्दशभौतिकेषु।
पातालपञ्चदशवह्निहिमांशुकोष्ठे
वर्णांल्लिखेल्लिपिभवान्क्रमशस्तु धीमान्॥ २०२॥
जन्मर्क्षाक्षरतौ यावन्मन्त्रादिमाक्षरम्।
चतुर्भिः कोष्ठकैस्त्वेकमिति कोष्ठचतुष्टये॥ २०३॥
पुनः कोष्ठककोष्ठेषु सव्यतो जन्मभाक्षरात्।
सिद्धसाध्यसुसिद्धारिक्रमाज्ज्ञेया विचक्षणैः॥ २०४॥
सिद्धः सिध्यति कालेन साध्यस्तु जपहोमतः।
सुसिद्धो ग्रहमात्रेण अरिर्मूलनिकृन्तनः॥ २०५॥
सिद्धसिद्धो यथोक्तेन द्विगुणात्सिद्धसाधकः।
सिद्धसुसिद्धोऽर्धजपात्सिद्धारिर्हन्ति बान्धवान्॥ २०६॥
साध्यसिद्धो द्विगुणिकः साध्यसाध्यो ह्यनर्थकः।
तत्सुसिद्धस्त्रिगुणितात्साध्यारिर्हन्ति गोत्रजान्॥ २०७॥
सुसिद्धसिद्धोर्धजपात्तत्साध्यस्तु गुणाधिकात्।
तत्सुसिद्धो ग्रहादेव सुसिद्धारिः स्वगोत्रहा॥ २०८॥
अरिसिद्धः सुतान्हन्यादरिसाध्यस्तु कन्यकाः।
तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हन्ति साधकम्॥ २०९॥

तथा च तन्त्रे अस्य च मन्त्रविशेषेऽपवादः

नृसिंहार्कवराहाणां प्रासादप्रणवस्य च ।
वैदिकस्य च मन्त्रस्य सिद्धादीन्नैव शोधयेत् ॥ २१० ॥
स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे ।
एकाक्षरे तथा मन्त्रे सिद्धादीन्नैव शोधयेत् ॥ २११ ॥

स्वकुलान्यकुलत्वादि विज्ञेयं चागमान्तरात् ।
न विस्तरभयादत्र व्यर्थत्वादपि लिख्यते ॥ २१२ ॥
श्रीमद्गोपालदेवस्य सर्वैश्वर्यप्रदर्शिनः ।
तादृक्षक्तिषु मन्त्रेषु नहि किञ्चिद्विचार्यते ॥ २१३ ॥

तथा च क्रमदीपिकायाम् (1.4)
सर्वेषु वर्णेषु तथाश्रमेषु
नारीषु नानाह्वयजन्मभेषु
दाता फलानामभिवाञ्छितानां
द्रागेव गोपालकमन्त्र एषः ॥ २१४ ॥

त्रैलोक्यसंमोहनतन्त्रे च अष्टादशाक्षरमन्त्रमधिकृत्य श्रीशिवेनोक्तम्
न चात्र शात्रवा दोषा नर्णस्वादिविचारणा ।
ऋक्षराशिविचारो वा न कर्तव्यो मनौ प्रिये ॥ २१५ ॥
केचिच्छिन्नाश्च रुद्धाश्च केचिन्मदसमुद्धताः ।
मलिनाः स्तम्भिताः केचित्कीलिता दूषिता अपि ।
एतैर्दोषैर्युतो नायं यतस्त्रिभुनोत्तमः ॥ २१६ ॥ इति ।

सामान्यतश्च यथा बृहद्गौतमीये
अथ कृष्णमनून्वक्ष्ये दृष्टादृष्टफलप्रदान् ।
यान्वै विज्ञाय मुनयो लेभिरे मुक्तिमञ्जसा ॥ २१७ ॥
गृहस्था वनगाश्चैव यतयो ब्रह्मचारिणः ।
स्त्रियः शूद्रादयश्चैव सर्वे यत्राधिकारिणः ॥ २१८ ॥
नात्र चिन्त्योऽरिशुद्ध्यादिर्नारिमित्रादिलक्षणम् ।
न वा प्रयासबाहुल्यं साधने न परिश्रमः ॥ २१९ ॥
अज्ञानतूलराशेश्च अनलः क्षणमात्रतः ।
सिद्धसाध्यसुसिद्धारिरूपा नात्र विचारणा ॥ २२० ॥
सर्वेषां सिद्धमन्त्राणां यतो ब्रह्माक्षरो मनुः ।
प्रजापतिरवापाग्र्यं देवराज्यं शचीपतिः ।
अवापुस्त्रिदशाः स्वर्गं वागीशत्वं बृहस्पतिः ॥ २२१ ॥ इत्यादि ।

तन्त्रैवान्तरे
विष्णुभक्त्या विशेषेण किं न सिध्यति भूतले ।
कीटादिब्रह्मपर्यन्तं गोविन्दानुग्रहान्मुने ॥ २२२ ॥
सर्वसम्पत्तिनिलयाः सर्वत्राप्यकुतोभयाः ।
इत्यादि कथितं किञ्चिन्माहात्म्यं वो मुनीश्वराः ॥ २२३ ॥
आकाशे तारका यद्वत्सिन्धोः सैकतसृष्टिवत् ।
एतद्विज्ञानमात्रेण लभेन्मुक्तिं चतुर्विधाम् ॥ २२४ ॥
एतदन्येषु मन्त्रेषु दोषाः सन्ति परे च ये ।
तदर्थं मन्त्रसंस्कारा लिप्यन्ते तन्त्रतो दश ॥ २२५ ॥

सरदातिलके
जननं जीवनं चेति ताडनं रोधनं तथा ।
अथाभिषेको विमलीकरणाप्यायने पुनः ।
तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंस्क्रियाः ॥ २२६ ॥
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ।
प्रणवान्तरितान्कृत्वा मन्त्रवर्णान्जपेत्सुधीः ॥ २२७ ॥
एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः ।
मनोर्वर्णान्समालिख्य ताडयेच्चन्दनाम्भसा ॥ २२८ ॥
प्रत्येकं वायुना मन्त्री ताडनं तदुदाहृतम् ।
विलिख्य मन्त्रं तं मन्त्री प्रसूनैः करवीरजैः ॥ २२९ ॥
तन्मन्त्राक्षरसङ्ख्यातैर्हन्यात्प्रयत्नेन रोधनम् ।
स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसङ्ख्यया ॥ २३० ॥
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये ।
संचिन्त्य मनसा मन्त्रं योतिर्मन्त्रेण निर्दहेत् ॥ २३१ ॥
मन्त्रे मूलत्रयं मन्त्री विमलीकरणं त्विदम् ।
तारव्योमाग्निमनुयुगदण्डी ज्योतिर्मनुर्मतः ।
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षणं मनोः ॥ २३२ ॥
तेन मन्त्रेण विधिवदेतदाप्यायनं स्मृतम् ।
मन्त्रेण वारिणा यन्त्रे तर्पणं तर्पणं स्मृतम् ॥ २३३ ॥
तारमायारमायोगो मनोर्दीपनमुच्यते ।
जप्यमानस्य मन्त्रस्य गोपनं त्वप्रकाशनम् ॥ २३४ ॥

बलित्वात्कृष्णमन्त्राणां संस्कारापेक्षणं नहि ।
सामान्योद्देशमात्रेण तथाप्येतदुदीरितम् ॥ २३५ ॥

इति श्रीगोपालभट्टविलिखिते श्रीभगवद्भक्तिविलासे
गौरवो नाम प्रथमो विलासः।